

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 03
June 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

जून् - २०२४ रू. २०/-

## तिरुमल ज्येष्ठाभिषेकमहोत्सवः

2024 जून् 19 तः 21 पर्यन्तम्



## श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः - अप्पलायगुण्ट

| दिनाङ्क | वासरः | प्रातः उत्सवः | रात्रौ उत्सवः |
|---|---|---|---|
| १६.०६.२०२४ | भानुवासरः | - - | अङ्कुरार्पणम् |
| १७.०६.२०२४ | इन्दुवासरः | ध्वजारोहणम् | महाशेषवाहनम् |
| १८.०६.२०२४ | भौमवासरः | लघुशेषवाहनम् | हंसवाहनम् |
| १९.०६.२०२४ | सौम्यवासरः | सिंहवाहनम् | मौक्तिकमण्टपः |
| २०.०६.२०२४ | बृहस्पतिवासरः | कल्पवृक्षवाहनम् | सर्वभूपालवाहनम् |
| २१.०६.२०२४ | भृगुवासरः | आन्दोलिकायां मोहिन्यवतारः | गरुडसेवा |
| २२.०६.२०२४ | मन्दवासरः | हनुमद्वाहनम् सा - वसन्तोत्सवः | गजवाहनम् |
| २३.०६.२०२४ | भानुवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| २४.०६.२०२४ | इन्दुवासरः | रथोत्सवः | अश्ववाहनम् |
| २५.०६.२०२४ | भौमवासरः | चक्रस्नानम् | ध्वजावरोहणम् |



## श्री तिरुचानूरु पद्मावती देव्याः प्लवोत्सवः

| दिनाङ्क | वासरः | उत्सवः |
|---|---|---|
| १७-०६-२०२४ | इन्दुवासरः | श्रीकृष्णस्वामिनः |
| १८-०६-२०२४ | भौमवासरः | श्रीसुन्दरराजस्वामिनः |
| १९-०६-२०२४ | सौम्यवासरः | श्रीपद्मावतीदेव्याः |
| २०-०६-२०२४ | बृहस्पतिवासरः | श्रीपद्मावतीदेव्याः |
| २१-०६-२०२४ | भृगुवासरः | श्रीपद्मावतीदेव्याः |



# गीतामृतम्

श्रीभगवानुवाच -

आश्चर्यवत्पश्यति कश्चिदेन माश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्।।

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि।।

(भगवद्गीता २.२९-३०)

श्रीभगवान् उवाच हे अर्जुन!

भावः - कश्चित् जनः आत्मानम् आश्चर्यकरं वस्तु इव पश्यति, अन्यः आत्मानम् आश्चर्यकरं वस्त्विव वदति। अन्यः आत्मानम् आश्चर्यकरं वस्त्विव शृणोति, कश्चिदपि आत्मानं न जानाति।
हे अर्जुन! सर्वस्य देहे विद्यमानः आत्मा सदा हन्तुमशक्यः नित्यः।
तस्मात् कमपि भूतमधिकृत्य भवान् दुःखं प्राप्तुं न अर्हसि।

# सङ्कीर्तनम्



करारविन्देन पदारविन्दं
मुखारविन्दे विनिवेशयन्तम्
वटस्य पत्रस्य पुटे शयानं
बालं मुकुन्दं मनसा स्मरामि ।।१।।

संहृत्य लोकान्वटपत्रमध्ये
शयानमाद्यन्तविहीनरूपम्।
सर्वेश्वरं सर्वहितावतारं
बालं मुकुन्दं मनसा स्मरामि ।।२।।

(बालमुकुन्दाष्टकम्)

# मानवसेवा एव माधवसेवा

मानवसेवा एव माधवसेवा इति महात्मनाम् आर्योक्तिः। सर्वे मानवाः माधवस्य सेवां कृत्वा स्वीयजीवितं सार्थकयितुं यतमानाः दृश्यन्ते। इयं पद्धतिः सर्व वेदैः शास्त्रैः, पुराणैश्च अङ्गीकृतः, अत एव परमोत्तमा पद्धतिः। एवमेव माधवः विराड्रूपः भवति। सनातन सिद्धान्तानुसारेण सर्वे जीवाः माधवस्वरूपाः एव भवन्ति। अत एव भगवद्गीतायामपि ''ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'' इति भगवता श्रीकृष्णेन कण्ठ्योक्त्या प्रतिपादितम्। एवं मा हिंस्यात् सर्वा भूतानि'' इति अहिंसा परमोधर्मः'' इति वृक्षाणां पत्रच्छेदनमपि पापाय भवति इति आर्योक्तयः सङ्गच्छन्ते। सङ्घजीवी मानवः सङ्घगतान् सहजीविनः मानवान् अवश्यमाद्रियेत। न हि तावदेव किन्तु परिपूर्णतया सहजीविषु दया अपि प्रदर्शनीया।

एतत् सर्वं मनसि निधायैव योगदर्शने अपि अष्टाङ्गमध्ये अहिंसास्तेयादिकमपि योजितम् इति चिन्तनीयम्। लोके प्रसिद्धान् पुरुषान् तेषां जीवितचरित्राणि च पश्यामः चेत् ते महानुभावाः परोपकारस्य कियत् प्राधान्यं दत्तवन्तः इति वयं ज्ञातुं शक्नुमः। भगवता व्यासेनाप्युक्तं पादद्वयेन वक्ष्यामि यदुक्तं गन्थकोटिभिः परोपकारः पुण्याय पापाय परपीडनम् इति। मानवसेवैव माधवसेवा इति निश्चित्यैव ति.ति.देवस्थानैः महता आदरेण सर्वेषां भक्तजनानाम् अन्नसन्तर्पणं, वृद्धजनानाम् एवं शिशुमातृणां च प्रत्येक दर्शन संविधानम् अपि कृतमस्ति। एवमेव चिकित्सालयः आयोजितः। आयुर्वेदवैद्याभिवृद्धये आयुर्वेदवैद्यशालाः, कळाशालाश्च स्थापिताः एवम् अस्थि चिकित्सायाः कृते (BIRRD) अपि आयोजितमस्ति।

आपद्ग्रस्तानां सेवा, रोगिणां च सेवा माधव सेवा एव भवति। एतादृशसेवाभिः भगवान् माधवः स्वसेवापेक्षया अतीव तृष्यन् स्वीयानुग्रंह तेषु जीविषु प्रसारयति इत्यस्य संशयलेशस्यापि अवकाशः नास्ति। अन्नार्तानाम् अन्नदानं, रुग्णानाम् आवश्यक सेवा, निर्गृहाणां गृहप्रदानं, निर्वस्त्राणां वस्त्रदानं, निर्विद्यानां विद्यादानम्, अवयवापेक्षिणां तत् अवयवदानं, आवश्यकानां रक्तप्रदानं इत्येतत् सर्वमपि माधव सेवा एव भवति इति निश्चेतव्यम्। सति अवकाशे एतादृश विषयेषु सर्वे जनाः अपि तत्तत् दानोत्सुकाः भवेयुः इति शास्त्रमपि तत्तत् समयेषु तेषां तेषां तत्तत् दानप्रदानप्रोत्साहनद्वारा मानवसेवैव माधवसेवा इति दृढीकरोति।

# जून् -२०२४

सम्पुटिः-११ सञ्चिका-०३

श्रीक्रोधिसंवत्सरस्य वैशाखकृष्णनवमी तः
श्रीक्रोधिसंवत्सरस्य ज्येष्ठकृष्णनवमी पर्यन्तम्-१९४४



मुखचित्रम् - श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः, तिरुमल।

अन्तिमरक्षापुटः - श्रीपद्मावतीदेव्याः प्लवोत्सवः, तिरुचानूरु।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका




गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.),
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -
डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.



# ज्येष्ठाभिषेकः

- जि.विद्यावती
चरवाणी - ८६८६१३१८३३

भगवतः अखिलाण्डकोटिब्रह्माण्डनायकस्य विराजमानस्य श्रीनिवासस्य आराधनं सर्वाभ्यदयुसाधकमिति विपश्चिदपश्चिमानां निश्चयः। आराधनं तावत् सुप्रभातादारभ्य शयनोत्सवपर्यन्तं षट्सु कालेषु संप्रदायपद्धत्या वैखानसभगवच्छास्त्रानुसारेणैव प्रचलतीति नैव सन्देहलेशः। उत्सवास्तावात् नित्य नैमित्तिक-वार-पक्ष-मास-संवत्सरोत्सव-ज्येष्ठाभिषेकोत्सव-पवित्रोत्सव-ब्रह्मोत्सव-पुष्पयाग-अध्ययनोत्सव-प्लवोत्सवाः सन्ति। एते पारंपर्यपद्धत्या वैभवेन प्रचलन्तीति सार्वजनीनोऽयं विषयः **ज्येष्ठाभिषेकः**।

संवत्सरोत्सवेषु अन्यतमः विशिष्टः अद्वितीयश्चायं ज्येष्ठाभिषेकः। भगवतः अर्चामूर्तेः बिम्बानि तावत् सुरुपाणि प्रसन्नवदनेक्षणानि अचिन्त्यदिव्याद्भुतनित्य - यौवनलावण्यातिशयेन च रराजमानानि स्युः। बिम्बं तावत् द्विविधं भवेत् लोहबिम्बं शिलाबिम्बमिति। लोहबिम्बानि तावत् कौतुक-स्नपन-उत्सव-बलिनामकानि। शिलाबिम्बं तावत् ध्रुवबिम्बमेव। तिरुमलक्षेत्रे विराजमानां उत्सवबिम्बानां तु पुष्पालङ्करणं स्नपन वस्त्रधारणं सौवर्णादिभिः भूषणैः - अलङ्करणं नित्यं विशेषतया कुर्वन्ति अर्चकाः। ताभिः अनेक क्रियाभिः बिम्बानां अङ्गभिन्नं सौन्दर्यभिन्नं च प्रायः भवेदिति धिया बिम्बरक्षणार्थं रूपसौन्दर्यसंरक्षणार्थं च श्रीनिवासस्य उत्सवबिम्बानां ज्येष्ठाभिषेकं वैभवेतः वैदिक्या पद्धत्या समाचरन्ति अर्चकाः। प्रतिष्ठापनीयस्य विग्रहस्य रूपं त्रिविधं चित्रं चित्रार्थं चित्रभासमिति। तत्र चित्रं तावत् अङ्ग उपाङ्ग-महाङ्ग-प्रत्यङ्गैः, सौष्ठवमेव। चित्रार्थं तावत् पादादिशिरःपर्यन्तं पुरोभागस्य सन्दर्शनं, चित्राभासं तावत् पटकुड्यादिषु विलेखनम्। एतानि त्रीणि बिम्बानि प्राणप्रतिष्ठार्हाणि भवन्ति। अग्निकुण्डे वैष्णवविष्णुसूक्तसर्वदैवत्य पारमात्मिक-ईंकारादिभिः मन्त्रैः महाशान्तिहोमः अभिषेकः कवचसन्धानं इत्येते कार्याः। ज्येष्ठमासस्य ज्येष्ठानक्षत्रयुते दिने एनां सभ्याग्निश्च प्रत्येकतया निर्मीयात्। कूर्मपीठोपरि आचार्यः आसीनो भूत्वा क्रियाविधिं समग्रम् आचरेत्। महा व्याहृतिभिर्युक्तैः वैष्णव-विष्णुसूक्त-सर्वदैवत्य पारमात्मिकादिभिः होमं कृत्वा अनुहोमं कुर्यात्। पौण्डरीकाग्निकुण्डं प्राप्य महाशान्तिहोमं कुर्यात्। पूर्णाहुतिना युक्ताम् अस्तहोमक्रियाम् आचरेत्। उक्तरीत्या शान्तिवाक्यानि पठित्वा कार्यक्रमस्य परिसमाप्तिं कुर्यात्। कवचविधिनिमित्तं प्रोक्तं क्रियाविधिं सर्वं कारयेत्। नित्यपूजाविधानेन देवदेवमाराधयेत्। पायसादिमहाहविः निवेदयेत्। क्षमामन्त्रैः देवदेवं प्रार्थयेत्। ब्रह्मघोषपूर्वकेन श्रीस्वामिनः मूलविराड्रूपे दिव्यसान्निध्यशक्तिं कौतुकबेरे स्थिते विग्रहे प्रतिनित्यम् आवाहनं कृत्वा, विधिपूर्वकतया आराधनां कुर्यात्। अयं

ऐहिकामुष्मिककफलप्रदः इति प्रोक्तः। अर्थात् भौतिकेच्छारहिताः मोक्षेच्छुकाः सन्तः स्वामिनं ये सेवन्ते एवञ्च ये स्वेष्टकाम्यार्थं सिद्धिनिमित्तं स्वामिनं सेवन्ते तावुभावपि कौतुकबेराराधनां कुर्यास्तामिति वैखानसागमोक्तिः।

किन्तु, एवं रूपेण अभिषेकानामाचरणे बिम्बानां मूलस्वरूपे परिवर्तनानि भवितुमर्हन्ति। अस्य परिष्कारार्थं ९० तमे दशके श्रीस्वामिनः आलये संवत्सरोत्सवतया 'ज्येष्ठाभिषेकः' इति कथ्यमानः उत्सवः शास्त्रोक्तरीत्या आचरितः। 'ज्येष्ठमासे यदा पूर्णिमायां चन्द्रः ज्येष्ठानक्षत्रेण युतः भवति तदा देवदेवस्य विग्रहोपरि विशेषसुगन्धतैलसमर्पणं भवत्विति' भृगुः प्रकीर्णाधिकारे उल्लिखितवान्। एनमेव 'सुगन्धतैलसमर्पणोत्सवः' इति क्रियाधिकारे प्रोक्तः। एनमुत्सवं वैखानसागमोक्तदिशा निर्वहणेन विष्णोः दिव्यार्चावतारः अमिततेजसा प्रकाशते इति क्रियाधिकारः ज्ञापयति। तिरुमलायां ज्येष्ठपूर्णिमायां पूर्णोभवत्वितिरीत्या दिनत्रयं यावत् वैभवेन आचरन्ति। ज्येष्ठाभिषेकमहोत्सवात् १४ दिनेभ्यः पूर्वम् श्रीस्वामिनः उत्सवमूर्तीनां अर्थात् 'श्रीदेवीभूदेवीसमेत मलयप्पस्वामिने' गतवर्षे धारितान् स्वर्णकवचान् शोधयन्ति। उत्सवनिर्वहणार्थं प्रत्येकतया 'कङ्कणभट्टर्' इत्युच्यमानाय वैखानस-अर्चकाय प्रधानाचार्यपदवी दीयते। प्रकीर्णाधिकारे प्रोक्तदिशा आचार्यस्वामी उत्सवमूर्तीनामुपरि स्वर्णकवचं 'परिलिखित' इति मन्त्रेण परिशोधयेत्। ततः स्वर्णकवचे लोपे सति तेषां संस्करणं सुशिक्षितेन शिल्पिना कारयित्वा स्थापयेदिति शास्त्रवचनम्।

ज्येष्ठाभिषेकस्य प्रथमदिने श्रीस्वामिनः माध्याह्नाराधनायाः परिसमाप्त्यनन्तरं श्रीमलयप्पस्वामिनम् उभयदेवीभ्यां सहितं विमानस्य प्राकारप्रदक्षिणतया, सम्पङ्गि-प्राकारे यागशालायाम् 'अष्टोत्तरशतकलश-स्नपन तिरुममञ्जनम्' इति वैदिकी प्रक्रियां १०८ कलशैः निर्वहन्ति। ततः कल्याणमण्डपस्थयागशालायां समानयन्ति। वैखानस भगवच्छास्त्रविधितया देवताप्रार्थनां, विष्वक्सेनाराधनां, स्वस्ति-पुण्याहवाचनम्, अङ्कुरार्पणं, रक्षाबन्धनम्, अग्निप्रणयनादिप्रक्रियाम् शास्त्रोक्तदिशा, वेदपुरस्सरेण निर्वहन्ति। तदनन्तरम् उत्सवार्थं सर्वकार (ति.ति.दे) पक्षतः कार्यनिर्वहणाधिकारि-दम्पत्योः सङ्कल्पः प्रोक्तः। यागशालायां १०८ कलशान्, ९ कलशान् च व्यूहेन ४ पङ्क्तिषु स्थापयन्ति। एवं रीत्या तिस्रः पङ्क्तयः भवन्ति। मध्यस्थे प्रधानकलशे वरुणदेवताम् आवाह्य, उपचारसमर्पणं कुर्वन्ति। प्रधानहोम प्रायश्चित्तहोम अन्तहोमान् पूर्णाहुतिं च निर्वह्य, अग्न्युपस्थानेन होमकैङ्कर्यं समाप्तिं कुर्वन्ति। ततः श्रीस्वामिनः उत्सवमूर्तिभ्यः १२ प्रकारद्रव्यैः तथा च दुग्धदधि-मधु-हरिद्रादि द्रव्यैश्च विशेषस्नपनतिरुमञ्जनं भवति। सायङ्काले श्रीदेवीभूदेवीसमेतम् श्रीमलयप्पस्वामिनम् अतिमूल्य-मनोहर-वज्रकवचेन अलङ्कृत्य, चतुर्षु पुरवीथिषु उत्सवं निर्वहन्ति। एवमेव शेषदिनद्वयं प्रातःकाले अष्टोत्तरकलशस्नपनं तथा च द्वितीयदिनस्य सायङ्काले मौक्तिककवचम्, तृतीयदिनस्य सायङ्काले स्वर्णकवचेन तिरुवीथ्युत्सवः भवति। प्रातःकाले स्नपनानन्तरं कवचप्रतिष्ठा भवति। तृतीयदिनस्य प्रातःकाले अष्टोत्तरकलशस्नपने भागतया होमादिवैदिकीप्रक्रियाणां परिसमाप्यनन्तरं, पञ्चगव्ये (गोक्षीर-गोदधि-गोघृत-गोमूत्र-गोमय) अधिदेवतान् आवाह्य, उपचारं समर्प्य, अनन्तरं कवचार्थं वास्तुहोमं कुर्वन्ति। पञ्चगव्यैः कवचप्रोक्षणं कृत्वा, वास्तुशुद्धिं कारयित्वा, स्वर्णकवचान् श्रीस्वामिनः उत्सवमूर्तिभ्यः समर्पणाय योग्यान् कुर्वन्ति (पवित्रीकुर्वन्ति)। पञ्चदशसूक्तैः अभिमर्शनक्रियां कवचेभ्यः निर्वह्य, ततः 'विष्णोर्नुकम् इति मन्त्रेण स्वर्णकवचं, श्रीदेवीभूदेवीसमेतमलयप्पस्वामिने दृढतया, स्थिरतया च समर्पयन्ति। आवर्षं स्वामिनः उत्सवमूर्तयः स्वर्णकवचैः शोभायमानाः भवन्ति। किन्तु ज्येष्ठाभिषेकोत्सवसन्दर्भे तावत् स्वामिनः निजार्चारूपदर्शनं भक्तेभ्यः भवति। एवमेव साधारणतया अभिषेकद्रव्यैः दुग्धदधिप्रभृतिभिः स्वामिनः पादौ एव अभिषिञ्चन्ति। उत्सवमूर्तयः स्वर्णकवचैः भवन्तीति कारणात् एवं क्रियते। किन्तु ज्येष्ठाभिषेकसमये एव श्रीमलयप्पस्वामिने शिरसादिपादपर्यन्तं सर्वैः द्रव्यैः अभिषेकं कुर्वन्ति। मूर्तीनां रूपेभ्यः सुष्ठु धारणयोग्यरीत्या कवचान् सर्वप्रयत्नैः सम्भरणं कृत्वा बिम्बानां रक्षणं कर्तव्यमिति अयमेव ज्येष्ठाभिषेकस्य परमार्थः इति भृगुः प्रकीर्णाधिकारे प्रोक्तवान्। एवमेव तृतीयदिने स्वर्णकवचसमर्पणात् पूर्वं श्रीस्वामिनः मूर्तिभ्यः सुगन्धतैलं समर्प्य शरीरोपरि चन्दनं, तस्योपरि श्वेतवस्त्रं धारयित्वा, कवचधारणं कुर्वन्ति। एवं रीत्या तिरुमलायां वैभवेन दिनत्रयं यावत् ज्येष्ठाभिषेकमहोत्सवं निर्वहन्ति। अस्मिन् उत्सवे भागग्रहीतृभ्यः सर्वेभ्यः भक्तेभ्यः श्रीवेङ्कटेश्वरस्वामिना दिव्याशीः दीयते। वयमपि अस्मिन्नुत्सवे भागं गृहीत्वा श्रीस्वामिनः कृपापात्राः भवेम।



# मुमुक्षोः व्यवहर्तव्यविधानम्

- डा.के. सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०



(तदनन्तरम्)

**३. शमदमादिषट्कसम्पत्तिः -** शमः दमः उपरतिः तितिक्षा, श्रद्धा, समाधानानि। एतेषां सिद्धिः सम्पादनीया। शमो नाम अन्तरिन्द्रियनिग्रहः। दुरालोचनाप्रवाहं निरुद्ध्य सद्विषयभावनास्थिरस्थापनमेव शमः। तीव्रमनोबलवन्तः संकल्पबलेनैव शमं साधयन्ति। इतरे दमेन शमं साधयन्ति।

**दमः** दमो नाम बहिरिन्द्रियनिग्रहः। पूर्वजन्मवासनया मनसि कामाः प्रविशन्ति। तदा शास्त्रीयपद्धत्या तेषां दमनं कर्तव्यम्। तेषु कामेषु मनसः निरोधः कर्तव्यः। दमः श्रद्धाविश्वासाभ्यां करणीयः।

**उपरतिः -** उपरतिः नाम विरामः। लोके शब्दरूपादयः मनः आकर्षन्ति। विवेकात् तानि दुःखप्रदानीति ज्ञात्वा अभ्यासवशात् आकर्षकेन्द्रियाणां बन्धनं एव उपरतिः। विवेकात् उपरतिद्वारा दमसाधनेन शममार्गः सम्भवति।

**तितिक्षा -** सहनमेव तितिक्षा। शीतोष्णादिवैषम्याणां प्रतिक्रियाकरणे पापानि सम्भवन्ति। पूर्वजन्मकर्मफलादेतानि दुःखानि आगतानीति कर्मफलमनुभोक्तव्यमेवेति विवेकोदयात् दुःखसहनमेव, तितिक्षा उपरतेः द्वारं भवति।

**श्रद्धा -** श्रद्धा नाम विश्वासः। विवेकः शास्त्रवाक्यात् जायते। शास्त्राणि गुरवः विवृण्वन्ति। गुरुषु शास्त्रेषु विश्वासादेव भावाः विदिताः सन्तः अनुभवपथमागमिष्यन्ति। अतः शमदमोपरतितितिक्षाणां मूलमेव श्रद्धा। गुरुशास्त्रविश्वासात् सत्यज्ञानं सम्भवति - सत्यज्ञाने दृढभावनैव श्रद्धा।

**समाधानम् -** समाधानं नाम एकाग्रता। मम मूलस्वरूपं किं, जगतः मूलतत्त्वं किं इत्येतादृशविषयेषु जिज्ञासया लौकिकविषयेषु अश्रद्धया तत्त्ववस्तुषु प्रीतिपूर्वकाग्रता जायते। तदेव समाधानम्। समाधानं पूर्वजन्मसंस्कारात् वर्धते समाधानात् विवेकः। विवेकात् समाधानाभिवृद्धिः विवेकसमाधानाभ्यां श्रद्धावृद्धिः। श्रद्धासमाधाने तितिक्षां तितिक्षा उपरतिं, उपरतिः दमं, दमः शमं अभिवर्धयति। एतेषां षडंशानां एव शमदमादिषट्कसम्पत्तिरिति नाम।

**मुमुक्षुत्वम् -** तीव्रमोक्षेच्छा। सर्वकामान् परित्यज्य परमात्मनि तादात्म्यसम्पादनतीव्रेच्छा एव मुमुक्षुत्वम्। दारापुत्रधनेच्छां परित्यज्य संसारबन्धविमुक्तिः प्राप्तव्येति तीव्रकाङ्क्षा आवश्यकी। शमदमादिषट्कसंपत्या मुमुक्षुत्वपरिपाकदशां प्राप्नोति।

साधनचतुष्टयसम्पत्तिप्राप्तेः त्रयः उपायाः सन्तिः - १. सदाचारः, २. सत्साङ्गत्यम् ३. सच्छास्त्रम् इति। साधनचतुष्टयद्वारा आत्मसाक्षात्कारः सम्भवति। साधनचतुष्टयसम्पादनाय तीव्रः पुरुषप्रयत्नः आवश्यकः।

**मान्द्यम्** - सदाचाराद्युपायसाधनप्रतिबन्धकं मान्द्यमेव। आलस्यं यदि न भवेज्जगत्यनर्थं..... संपूर्णा नरपशुभिश्च विधनैश्च (यो.वा.५.३०) अतः सर्वदा आलस्यरूपं मान्द्यं परित्याज्यं मुमुक्षुभिः। सत्साङ्गत्यात् सदाचारात् दुर्गुणाः नश्यन्ति।

शिवो नाम विशिष्टजीवी नियमानुसारं स्वपुरुषप्रयत्नेन जगल्लयीकरोति। यत्नेन विना न किमपि सम्भवति। विध्युक्तधर्मः अवश्यमाचरणीयः। स्वसुखदुःखयोः स्वयमेव कारणम्। प्रयत्नबलादेव बृहस्पतिः देवगुरुः अभवत्। शास्त्रतो गुरुतश्चैव स्वतश्चेति त्रिसिद्धयः सर्वत्र पुरुषार्थस्य न दैवस्य कदाचन। (यो.वा.७-११) कदाचित् शास्त्रात् कदाचित् गुरोरनुग्रहात् कदाचित् स्वयं पुरुषप्रयत्नसिद्धिः सम्भवति। अतः सर्वदा पुरुषप्रयत्नः मुमुक्षुणा अवश्यं कर्तव्यः।

"पौरुषेणैव यत्नेन पालयेच्चित्तबालकम्"। अभ्यासबलेन शुभवासनां बलं कुरु गुरुशास्त्रप्रमाणैस्तु निर्णीतं तदाचर "यथा स्थितं ब्रह्मतत्त्वं सत्ता नियतिरुच्यते।।" (यो.वा.१०-११) प्रपञ्चे सत्पदार्थः एकमेव परं ब्रह्म। मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः। "शमो विचारस्सन्तोषः चतुर्थः साधुसङ्गमः।" श्रवणमनननिदिध्यासाः आचरणीयाः। शुद्धसद्गुणं मनसि विधाय तत्त्वविचारणं कर्तव्यम्। श्रवणेन रजोगुणतमोगुणपरिहारः कर्तव्यः। मोक्षप्राप्त्यै शमस्य अधिकं प्रामुख्यं वर्तते। शमो नाम शान्तगुणः। साधनचतुष्टयसंपत्तौ अन्तरिन्द्रियनिग्रहः।

**शमेन साध्यते श्रेयः शमो हि परमं पदम्।**
**शमश्शिवं शमश्शान्तिः शमो भ्रान्तिनिवारणम्।।**

(१३-५२)

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा धृत्वा शुभाशुभम्।
न हृष्यति ग्लायति यः स शान्त इति कथ्यते।
आकाशसदृशी यस्य पुंस संव्यवहारिणः।
कलङ्कमेति न मतिः स शान्त यति कथ्यते

**विचारणम्** - १. पञ्चविधविचारणमावश्यकम्, २. सारासारहेयोपादेय प्रमाणतात्पर्यार्थानर्थानुबन्ध्य आत्मतत्त्वपरीक्षाविचाराः। सर्वावस्थासु नित्यसन्तोषः लोभत्यागः आवश्यकः साधुसङ्गमः अवश्यं कर्तव्यः।

**"विवेकः परमो दीपो जायते साधुसङ्गमात्"** (यो.वा.१६-६) एवं मुमुक्षुणा व्यवह्रियते चेत् अवश्यं मोक्षप्राप्तिस्स्यात्।।

**यतस्सर्वाणि भूतानि प्रतिभान्ति स्थितानि च।**
**यत्रोपरमं यान्ति तस्मै सत्यात्मने नमः।।**





## एप्रिल् २०२४
## लघुप्रश्नोत्तरी
## समाधानानि

१. गङ्गाशन्तनवोः
२. नैमिशारण्यम्
३. वर्षत्रयम्
४. अर्जुनः
५. कानीनः
६. अभिमन्युः
७. श्रीकृष्णः
८. यदुवंशे
९. १८ सहस्रश्लोकाः
१०. इन्द्रद्युम्नः
११. देवकी
१२. मुण्डकोपनिषदि
१३. राधेयः
१४. सत्यवती
१५. रावणः

(तदनन्तरम्)

दिव्यशरीरधारिणः महापुरुषाः सर्वेऽपि केशवं पूजयन्तः सन्ति। दृष्ट्वा रूपमेतत् केशवस्य सर्वे वानराः स्तब्धाः। तेषां समीपं आगच्छन्तं वेत्रहस्तं विश्वक्सेनं दृष्ट्वा वानराः भीताः वनान्तरं गत्वा दृष्टान्तस्य चर्चां अकुर्वन्। कश्चन अयं रावणः एव मायारूपं धृत्वा आगतः इति अवदत्। अन्यः एतत् सर्वं विष्णुमाया इति। सर्वे रामं प्रति दृष्टान्तं व्यवर्णयन् श्रुत्वा कथनं वानराणां,मन्दहासं कुर्वन् रामः "हे कपिश्रेष्ठाः! समग्रविचारानन्तरं एव निर्णयः कर्तव्यः। नृणां, नदीनां, देवतानां विषये दोषः न कर्तव्यः। वेङ्कटाद्रेः वैभवं अनन्तम्। सुराः अपि तस्य मर्मं ज्ञातुं असमर्थाः। भवन्तः सर्वेऽपि धन्याः। हरिदर्शनं भवतां प्राप्तम्। महतः प्रमोदस्य अयं विषयः।" इति उवाच। अनन्तरं, रावणसंहारं कृत्वा सीतासमेतं पुनः साकेतपुरीं प्राप्तवान्। एवं सूतः ऋषिभ्योऽवदत्।

सूतवचोभिः सन्तुष्टा मुनयः पुनः अपृच्छन् "हे पौराणिकमुने! वानरैः दृष्टं सुन्दरं रूपं कस्य?" प्रत्युत्तरं यच्छन् सूतः एवं अवदत् "श्रीवैकुण्ठविरक्तः श्रीहरिः वेङ्कटाचले अविर्बभूव। तमेव पुरुषं महान्तं वानराः अपश्यन्। स्वात्मानं प्रकटयितुं श्रीहरिः वानरेभ्यो स्वरूपं दर्शितवान्। वानरेभ्यः वैकुण्ठनारायणरूपं दर्शितवान् इत्यतः अयं वैकुण्ठगुहा इति अवदत्। इदं मोक्षस्थानं इति प्रकीर्तितम्।"




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

इति समापितवान्।

मुनयः ऊचुः " हे पौराणिकमणे भवता चतुर्दश- भुवनेषु विद्यमानाः विषयाः उक्ताः। विष्णोः कथामृतं श्रोतुमिच्छामः। कृपया वदन्तु। मनिवर्य! एवमेव भगवान् हरिः स्वेच्छया नैकेषु स्थानेषु स्थास्यन् शिष्टरक्षणं करोति एवं च सामान्यजनेभ्यः गोचरः भवतीति वदन्ति खिल! भगवान् हरिरीश्वरः वैकुण्ठविरक्तः किमर्थं वेङ्कटाद्रिं प्राप्तवान्। तस्यापि कारणं कथयतु" इति। सूत उवाच "अस्तु पुरा व्यासेनोक्तं विषयमेकं वदामि। एकदा सनकसनन्दनादयः विष्णुदर्शनाकाङ्क्षया वैकुण्ठं गतवन्तः। तत्र द्वारपालकौ जयविजयौ तान् स्थागितवन्तौ। अतः कुपिताः मुनयः तयाः शापं दत्तवन्तः। जन्मत्रयं विष्णोः विरोधः भवतु युवयोः इति। अतः राक्षसयोनौ जन्म स्वीकृतवन्तौ। हिरण्याक्षः हिरण्यकशिपुः इति प्रथमजन्मनि जातौ हिरण्याक्षः लोकान् पीडयति स्म। अनेनैव कारणेन श्रीहरिः वराहावतारं धृत्वा तस्य संहारं कृतवान्। भातृमरणेन कुपितः हिरण्यकशिपुः साधुहिंसादिदुष्कार्यम् अकरोत्। तं दुष्टं नारायणः नरसिंहावतारं धृत्वा मारितवान्। द्वितीयजन्मनि जयविजयौ रावणकुम्भकर्णौ। रावणः कुम्भकर्णः च साधु-जनान् पीडयति स्म। सर्वत्र त्राहि त्राहि इतिः भक्ताः देवाः अपि भगवन्तं नारायणं प्रार्थितवन्तः। तदा विष्णुसेवकः आकाशमार्गे अविर्बभूव। "हे विष्णुभक्ताः! भगवान् हरिः इदानीं वैकुण्ठे नास्ति। सः मर्त्यलोके पर्वते विराजमानः अस्ति तत्र गच्छन्तु इत्युक्तवान्। देवाः सर्वेऽपि मर्त्यलोकं प्राप्य गिरेः अन्वेषणं चक्रुः। तस्मिन्नेव मार्गे नारदमहर्षिः तैः दृष्टः। सर्वेऽपि नारदं प्रणम्य श्रीहरिः कुत्रास्ति इति पप्रच्छुः। नरदं उवाच "देवेन्द्र! मयापि स्वामिदर्शनं न प्राप्तम्। इदानीं भगवान् भूलोके एकस्मिन् गिरौ अस्ति इति वैकुण्ठवासिभिरुक्तं। भवतापि न दृष्टं खलु अतः वयं सर्वेऽपि ब्रह्मदेवस्य संनिधिं गत्वा तमेव महात्मानं प्रार्थयामः।" इति सर्वेऽपि सत्यलोकाधीश्वरस्य हिरण्यगर्भस्य नमस्कारं कृतवन्तः। विरिञ्चिः ब्रह्मा देवान् कुशलं पृष्टवान्। देवाः सर्वे स्वपीडां निवेदितवन्तः।

(अनुवर्तिष्यते)



2024 एप्रिल् 16 तः 23 पर्यन्तम् आयोजितस्य
ओण्टिमिट्ट-श्रीकोदण्डरामस्वामिनः
ब्रह्मोत्सवस्य दृश्यमालिका।

# तिरुमलायां हनुमान्मन्दिराणि

"देवकार्यामुलस्य दिक्कुवरेणः तपः फलपुण्यः फलप्रदः। श्रीवेङ्कटेश्वरस्य सेवाग्रगण्युः सेवधनः सर्वसारण्या च"। अन्नमय्य श्रीआञ्जनेयस्वामी तान् 'श्रीवेङ्कटेश्वरसेवाग्रागण्यु' इति महिमानम् अकरोत्, सः स्वामी भगवान् रामस्य सेवायां आसीत्, सः अद्य कलियुगे प्रफुल्लिते तिरुमलक्षेत्रे विभिन्नरूपेण प्रकटितः अस्ति।



## श्री आज्ञापालक आञ्जनेयस्वामी (सम्पुलावरी मेडा)

उत्सवमूर्तिः श्रीआज्ञापालकअञ्जनेयस्वामी तिरुमलानगरस्य श्रीवेङ्कटेश्वरस्वामिमन्दिरस्य श्रीरामपीठे अस्ति। यदा केनापि वृद्धेन सह वार्तालापं कुर्मः तदा अस्माकं मुखस्यबिन्दुः श्वासः न तेषु न प्रवहत् इति यथा मुखे हस्तं स्थापयामः। अयं स्वामी श्रीरामचन्द्रमूर्तिरूपेणतस्य आज्ञां शृण्वन्मुखस्य उपरि हस्तं धारयन् वर्तमानः अस्य स्वामीरूपस्य श्रीरामचन्द्रमूर्तेः प्रमुख इति भावः। तिरुमले श्रीरामनवमी-श्रीरामपट्टाभिषेकसमये, तथैव श्रीरामचन्द्रमूर्तेः पूजा उत्सवेषु न स्वामी भक्तानां पुरतः परन् भक्तानां समक्षं प्रकटितः भवति। अस्य स्वामिनः दर्शनेन भक्तानां भक्तिः वर्धते इति कथ्यते।

## श्रीबेदी आञ्जनेयस्वामी

तिरुमलक्षेत्रे श्रीवेङ्कटेश्वरस्वामीमन्दिरस्य विपरीतभागे सन्निधिवीथ्यां स्वामिमन्दिरस्य सम्मुखं 'श्रीबेदी अञ्जनेयस्वामीमन्दिरम्' अस्ति। अञ्जनेयु पर अञ्जनाद्रि। अञ्जनेयस्वामि-मातुः अञ्जनादेव्याः कथा सर्वेभ्यः आतङ्कं जनयति स्म, तस्याः पादौ हस्तौ च बैडी-सक्तं कृत्वा कुत्रापि न चलित्वा भगवतः श्रीवेङ्कटेश्वरस्वामिनः महोदयस्य पुरतः स्थितवती आसीत्। अस्य स्वामिनः करपादयोः सक्ताः इव बेदिः। श्रीबेदी अञ्जनेयस्वामी इति नाम स्वामि सन्निधिकारणात् निर्मितम् इति स्थलपुराणम् ज्ञायते। अभयारण्ये प्रायः षड्पादपरिमितः श्रीअञ्जनेयस्वामी कोलुवुडिरीनगरस्य भ्रमणं करोति।





## श्रीकोनेटिगट्टू आञ्जनेयस्वामी

तिरुमलायां स्वामिपुष्करिणीयाः ईशानकोणे अर्थात् श्रीवराहस्वामिनः मन्दिरस्य विपरीतभागे 'श्रीकोनेटिगट्टु आञ्जनेयस्वामी' मन्दिरम् अस्ति। इदं प्रतीयते यत् कोनेटिगट्टू इत्यत्र स्थितस्य कारणेन अस्य नाम प्राप्तम्। अस्मिन् पश्चिममुखे मन्दिरे स्वामी नमस्कारमुद्रायां दृश्यते। स्थलपुराणे प्रकाशितं यत् श्री आञ्जनेयस्वामी व्यासरानेन १६ शताब्द्यां अभिषिक्तः आसीत्।

## श्रीतलयेरुशिला आञ्जनेयस्वामी

अलिपिरीतः तिरुमलापर्यन्तं पादमार्गे पादमण्डपे गत्वा दृश्यमानं क्षेत्रे विशालशिला इव अस्ति इति नाम तलयेरुशिला इति। अस्य शिलायाः शिखरे श्रीआञ्जनेयस्वामी नमस्कारमुद्रायां दर्शनं ददाति। अधोभागे मुण्डनस्य उपरि जानु स्पर्शात् शिरः स्पृश्यजन्यानि डिम्पलानि सन्ति।अदरगभक्ताः ये पदमार्गेण पर्वतम् आरुह्य पर्वतात् अवतरन्ति भगवन्तः दर्शनार्थम् आगच्छन्ति, ते अस्य आञ्जनेयस्वामिनः प्रणम्य अस्मिन् तीर्थे शिरः जानु व आश्रित्य स्थापयन्ति। अतः भक्तानां मतं यत् वडवस्य कारणेन पादयोः रावणस्य, वा पीडा न भविष्यति।



(तदनन्तरम्)

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

श्लो.१३.

अनन्तगिरिमाश्रये हरितसस्यवस्त्राढ्या
हरौ विहरणोत्सुके सह भुवा प्रवञ्च्य श्रियम्।
विचित्रमणिदीपिका विलसिता गुहारूपिणी
यदीयफणमण्डली विपुलचन्द्रशालायते।

ता - श्रीवैकुण्ठे श्रीदेव्या सह रममाणः श्रीहरिः तां प्रमोह्य वञ्चयित्वा हरितवर्णसस्यरूपवस्त्रालङ्कृतया भूदेव्या सह विहर्तुम् आसक्तोऽभूत्। तदा भूमौ पर्वतरूपधरस्य आदिशेषस्य नानाविधमणिरूपदीपैः विराजमाना विविधगुहारूपा भोगमण्डली हरिविहरणानुकूलतया विशाला चन्द्रशालेव प्रकाशते। तादृशहरिकैङ्कर्यनिरतं तम् अनन्तम् अहम् आश्रयामि॥

सु.सौ.व्याख्या-भक्तजनावनार्थं भूमौ अवतीर्णस्य वैकुण्ठनाथस्य विष्णोः शेषगिरौ विहरणवैभवं अस्मिन् श्लोके वर्ण्यते।

हरौ.... श्रियम् -

"वैकुण्ठे तु परे लोके श्रियासार्धं जगत्पतिः।
आस्ते विष्णुरचिन्त्यात्मा भक्तैः भागवतैस्सह॥

इति पुराणवचनानुसारं श्रीवैकुण्ठे श्रीदेव्यासाकं रममाणो भगवान् जनार्दनः उपासनानुकूलं रूपं कल्पयितुं च तदीयहृदयानुगुणं विविधान् मूर्तिविशेषान् कृपया धत्ते। उक्तं च - "स एव करुणासिन्धुः भगवान् भक्तवत्सलः उपासकानुरोधेन भजते मूर्तिपञ्चकम्॥ इति



एवं परमपुरुषो भूमौ शेषाद्रौ श्रीवेङ्कटेशदिव्यरूपेण अवतीर्य भक्तानाम् आराधनानि सर्वाण्यपि स्वीकरोति। तान् उज्जीवयत्यपि।

तदेवात्र काव्यशैल्या - भूदेव्या सह विहरणोत्सुक-इत्यभिवर्ण्यते। हरिरत्र दक्षिणनायकः। श्रीदेवी एका नायिका। अपरा च भूदेवी। स्वानुरक्तां लक्ष्मीं पार्श्वेकृत्य भूम्या समं रन्तुम् आसक्तः शेषगिरिम् आगतो भगवान् इति चमत्कारः।

हरितसस्यावस्त्राढ्या- हरितवर्णविशिष्टसस्यरूप - -वस्त्रधारिणी वसुन्धरा। हरितशब्देनात्र फलोन्मुखता सूच्यते। स्वामिनः तस्याम् आसक्तेः हेतुरयम्। वैकुण्ठे हि रमा सदा धवलतरांशुकधारिणी। तत्र हरितवर्णांशुकस्य अदर्शनात् तादृशांशुभूषितायां भूदेव्याम् अतीवप्रीतिमान् आसीत् वासुदेवः। अनेन श्रीवैकुण्ठापेक्षया भूम्याः अतिशयो द्योत्यते। अतस्सोऽत्रागत्य तया सह विहरति इति भावः।। विचित्र... चन्द्रशालायते - भूदेव्या सह देवदेवस्य विहारार्थं गिरिरूपस्य शेषस्य शिरोमणिरूपैः दीपैः विराजिताः गुहारूपाः फणपङ्क्तयः चन्द्रशालावत् विहरणानुकूलस्थानानि भवन्ति। चन्द्रशाला नाम प्रासादस्य उपरिनिर्मितं गृहम्।'' चन्द्रशाल शिरोगेहम्'' पातालपुर.३४इति वैजयन्ती।

पूर्वश्लोकवत् अयमपि श्लोकः श्रीकृष्णदेवरायकर्तृके आमुक्तमाल्यदा प्रबन्धे द्वितीयपद्यस्य ''सिरिनोकप्पुडु'' इत्यादिकस्य अनुकृतिरिति स्तुतिकर्त्रा अभिहितम्।।

श्लोकोऽयं पृथ्वीवृत्ते निबद्धः - ''जसौ जसयलावसुग्रहयतिश्च पृथ्वीगुरूः'' इति तल्लक्षणम्। पृथिव्या सह हरेः विहरणस्य पृथ्वीवृत्ते वर्णनं विपश्चिज्जनविनोदाय सम्पद्यते।

(अनुवर्तिष्यते)

# श्री आञ्जनेय द्वादशनाम स्तोत्रम्



हनुमानञ्जनासूनुः वायुपुत्रो महाबलः।
रामेष्टः फल्गुणसखः पिङ्गाक्षोऽमितविक्रमः ।।१।।

उदधिक्रमणश्चैव सीताशोकविनाशकः।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ।।२।।

द्वादशैतानि नामानि कपीन्द्रस्य महात्मनः।
स्वापकाले पठेन्नित्यं यात्राकाले विशेषतः।
तस्य मृत्युभयं नास्ति सर्वत्र विजयी भवेत् ।।३।।

# योगशास्त्रम्

आर्. अनन्तकृष्णशर्मा
चरवाणी - ८९७८५८७७५१



**वैदिकजीवनपद्धतिः धर्मार्थकाममोक्षरूपिणी पुरुषार्थचतुष्टयम् आश्रिता वर्तते। अन्तिमः पुरुषार्थः एव जीवनस्य अन्तिमम् उद्देश्यम् अस्ति। तदर्थमेव दर्शनशास्त्राणां प्रवृत्तिः जायते। यद्यपि सर्वाणि दर्शनानि स्व-स्वसिद्धान्तानुसारं मोक्षस्य निरूपणमकुर्वन् तथापि योगदर्शने मोक्षस्य कृते साक्षात्कृतयत्नो विधीयते। मोक्षस्य कृते एव योगस्य उदयः सञ्जातः।**

आत्मनः परमात्मनि विलय एव योग उच्यते। यदा त्रिविध--दुःखानाम् निवृत्तिर्भवति, तदा आत्मा स्वरूपे विलीनो भवति। तत्पश्चात् जनन - मरणादयः पुनः न जायन्ते। अस्य आत्मसाक्षात्कारस्य शास्त्रीयं मार्गदर्शकं योगशास्त्रमस्ति। यतो हि वेदेषु उपनिषत्सु च योगस्य सोपायं वर्णनं प्राप्यते। ऋषयोऽपि योगेन एव मन्त्राणां साक्षाद्दर्शनं कृतवन्तः।योगदर्शनं दर्शनेषु अत्यतमम्। अस्य शास्त्रस्य रचयिता महर्षिः पतञ्जलिः। अयं पतञ्जलिः जीवः ईश्वरश्चेति तत्त्वद्वयं स्वीकरोति। अत एव अस्य दर्शनस्य 'सेश्वरसांख्यदर्शनम्' इति नामान्तरम्। यद्यपि पतञ्जलेः पूर्वाचार्याः हिरण्यगर्भयाज्ञवल्क्यादयः अनेके आचार्याः योगशास्त्रस्य प्रवक्तारः आसन् अथापि जनसाधारणानां कृते पतञ्जलिरेव तत् योगशास्त्रं सूत्ररूपेण ग्रन्थीकृत्य सम्यक् सरलरीत्या व्याजहार इति हेतोः अस्य योगदर्शनस्य 'पातञ्जलदर्शनम्' इति नाम सयुक्तिकं तिष्ठति।एवं योगस्य मुख्यमुद्देश्यं आत्मावबोधेन मुक्तिरस्ति तर्हि एते संशयाः प्रायशः समायान्ति - ननु अस्माभिः क्रियमाणो योगः साधुरेव वा? अथवा क्रियमाणेन आसनादियोगाभ्यासेन अकस्मात् शरीरपरित्यागतो स्वयं मुक्तो भवति वा? उत कालन्तरे मुक्तिः सिद्ध्यति वा? किम् एते अभ्यासाः वास्तविकतया मुक्तिं साधयन्ति वा? इत्यादयः। एतादृशानां संशयानामुद्भवे कारणमस्ति योगो नाम कः? इत्यत्र अनवधारणम्। एवं चेत् योगो नाम कः इति स्पष्टतया यदि अवगम्येत तर्हि एतादृशानां संशयानाम् उत्पत्तिरेव न भवति। अतः योगस्य को वा अर्थः? किं वा अत्र उद्दिष्टम्? उक्तानामभ्यासानां प्रयोगे को वा अधिकारी? इतः कस्य योगस्य अनुष्ठानमधुना चलति? यौगिकं जीवनं कथं भवेत्? अभ्यासे सति अवधेयांशाः के? किं वा अस्य अवान्तरं प्रयोजनम्? इत्येते अंशाः अधिगन्तव्याः सन्ति। एतेषामंशानामवगमनेन योगप्रयोगः कथं कार्य इति परिज्ञायेत। अतः एतेषां प्रतिपादनाय उपक्रमते।

**कस्य योगस्य अनुष्ठानमधुना चलति -** अस्मिन् काले उक्तेषु सम्प्रदायभेदेषु कस्य योगसम्प्रदायस्य अनुष्ठानं प्रचलति इति अवश्यं ज्ञातव्यः अंशः अस्ति। यतो हि एतदनुसारमेव किं जायमानमस्तीत्यत्र स्पष्टता सम्भवति। प्रागुक्तयोगसम्प्रदायेषु कस्यापि सम्प्रदायस्य साक्षात् प्रयोगः अधुनातनकाले न क्रियते। इतः साङ्कर्येण प्रतिदिनजीवने प्रयोक्तुं शक्यानामेव आभ्यासानां प्रयोग एव क्रियमाणः अस्ति। अत्र सम्प्रदायोक्तरीत्या अधिकारी साक्षात् न भवति चेदपि अभ्यासं कर्तुमिच्छया जातोऽयं साधकः अधिकारी इति कल्प्यते। एवं प्रसिद्धानां प्रयोगरूपिणां योगाभ्यासानां संयोजनं तावत् अपेक्षितरीत्या एव प्रकल्प्यते। अतः एतेषाम् अभ्यासेन क्लेशस्य उत्पत्तिरपि न भवेत्।

**यौगिकं जीवनं कथं स्यात् -** प्रागुक्तानामभ्यसनं, प्रयोगः प्रतिदिनं क्रियते चेत् अलं न भवति। एतेन साकं अहिंसा-सत्यम्-अस्तेयः-ब्रह्मचर्यम्-अपरिग्रहः इत्येतेषां यमानां तथा शौचं-सन्तोषः-तपः-स्वाध्यायः-ईश्वरप्रणिधानम् इत्येतेषां नियमानां च परिपालनं शक्त्यनुसारं करणीयमस्ति।

नीतिकथा

# मनोराज्यस्य फलम्



कस्मिंश्चित् नगरे कश्चित् स्वभावकृपणो नाम कोऽपि भिक्षुकः प्रतिवसति स्म। तेन भिक्षया प्राप्तेन सक्तुपिष्टेन कलशः सम्पूरितः। तं च घटं नागदन्ते रज्वा बद्ध्वा तस्याधस्तात् कटं प्रसार्य सततं तद्विषये चिन्तयन् सः सुप्तः। सः अचिन्तयत् - ''यत्परिपूर्णोऽयं घटस्तावत् सक्तुपिष्टेन वर्तते। यदि दुर्भिक्षं भवति तर्हि अस्य विक्रयणेन रूप्यकाणां शतं प्राप्स्यामि। ततस्तेन अहम् अजाद्वयं क्रेष्यामि। ततः षाण्मासिक-प्रसववशात् ताभ्यां यूथः भविष्यति। ततोऽजाभिः प्रभूताः धेनूः ग्रहीष्यामि, धेनुभिः महिषीः, महिषीभिः वडवाः, वडवाप्रसवतः प्रभूताः अश्वाः भविष्यन्ति। तेषां विक्रयणात्प्रभूतं सुवर्णं प्राप्स्यमि। सुवर्णेन चतुःशालं गृहं सम्पत्स्यते। ततः कश्चित् धनिकः प्राप्तवयस्कां रूपाढ्यां कन्यां मह्यं दास्यति। आवयोः पुत्रः भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततः सः जानुचलनयोग्यः भविष्यति। एकदा सोमशर्मा मां दृष्ट्वा मत्समीपम् आगमिष्यति। ततोऽहं कोपाविष्टः अभिधास्यामि भार्याम् ''गृहाण बालकम्'' इति। साऽपि मम वचनं न श्रोष्यति। तावत्काले कश्चन कुक्कुरः तत्र आगमिष्यति। सोमशर्मा तस्मात् भीतः भविष्यति। ततोऽहं समुत्थाय लगुडेन तं कुक्कुरं ताडयिष्यामि।'' एवं स्वप्नमग्नः ध्यानस्थितः सः तथैव लगुडप्रहारम् अकरोत्। तेन लगुडप्रहारेण सक्तुपिष्टेन पूर्णः सः घटः भग्नः अभवत्। स्वभावकृपणः सः पाण्डुरताम् अगच्छत्। अतः ब्रवीमि -



अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा।।

चित्रकथा

# हरिनाममहिमा

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

1 आनन्दपुरे श्रीहरेः मन्दिरं वर्तते। भक्ताः प्रतिदिनं तत्र समागत्य हरिनामसङ्कीर्तनं कुर्वन्ति। एकदा विद्यापतिः नाम एकः कुमारः तेषां समीपं गतः।

2 आर्य! अस्य सङ्कीर्तनेन किं प्रयोजनं भवति?

3 कुमार! अस्य सङ्कीर्तनेन सर्वशुभानि वर्धन्ते।



4 युवकः अपहासपूर्वकं हसति स्म। सः भक्तान् पृष्टवान् ........

5 परन्तु यदि सङ्कीर्तनं करोति तर्हि उदरं पूर्णं भवति वा?

6 अवश्यं लभ्यते। कुमार! सङ्कीर्तनस्य महिमा वर्णयितुं न शक्यते।



7 अहं ज्ञास्यामि भवता यत् उक्तं तत् सत्यं वा न वा इति।

8 अवश्यं कुमार!



9 विद्यापतिः समीपस्थं वनं गतः। सः एकस्य वृक्षस्य उपरि उपविश्य नामस्मरणं करोति स्म।




11 दिनत्रयं जातम्। विद्यापतेः बुभुक्षा अधिका आसीत्। तावत् एव एकः पथिकः वृक्षस्य अधः आगतवान्। प्राप्तम् अन्नं खादन्...




12 तस्मिन्नेव समये व्याघ्रस्य गर्जनां श्रुत्वा भयेन पथिकः पलायितः....



अन्नस्य पुटं वृक्षस्य अधः एव अस्ति। विद्यापतिः वृक्षस्य उपरि एव स्थितः। अचिरेण एव तत्र चोराः आगतवन्तः। चोरितं धनं भागं कर्तुम्।
पुनरागमने चोराः अन्न-पुटं दृष्टवन्तः... (14)

अरे! अत्र अन्नम् अस्ति। किम् अस्माकं कोऽपि अस्मिन् विषं मिश्रयति वा... (15)



(16) शङ्किताः चोराः सर्वत्र अन्वेषितवन्तः। ते वृक्षे स्थित विद्यापतिं गृहीतवन्तः। अधः पतितः।

(17) अरे! एतत् अन्नं खादतु। किं त्वं विषं मिश्रितवान् वा?

(18) अहं न खादामि! तस्मिन् विषं न मिश्रितवान्।



चोराः बलात् विद्यापतिना अन्नं खादितवन्तः। (19)

गच्छ.... गच्छ....चोराः
गतवन्तः विद्या पतिः (20)



सङ्कीर्तनस्य महिमा वर्णयितुं न शक्यते। तेन वैभवेन मया अन्नं प्राप्तम्। भक्ताः सत्यम् उक्तवन्तः। (21)



(22) विद्यापतिः सम्पूर्णतया परिवर्तितः। भगवन्नाम-सङ्कीर्तनं कृत्वा सुमार्गम् अनुसृतः।

आर्याः सर्वे (23) भगवन्नाम-स्तुतिं कुर्वन्तु!



नीतिः -
भगवन्नाम-सङ्कीर्तनं भुक्ति-मुक्ति-दायकम्।



स्वस्ति

# बा ल वि नो दि नी

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?





१. हनुमज्ञयन्ति, २. अभिषेक द्रव्याणि, ३.योग दिवसः

उचित समाधान सङ्ख्यां कोशे लिखन्तु।

रामस्य अङ्गळीयकं सीतया समर्पणाय हनुमतः मार्ग दर्शनं कुर्वन्तु।

(१ तः २० पर्यन्तं सङ्ख्यानां मेलनं कुर्वन्तु।)



| | | | | | |
|---|---|---|---|---|---|
| | 3 | 4 | 13 | 14 | 15 |
| 1 | 2 | 15 | 12 | 13 | 14 |
| 4 | 3 | 12 | 11 | 20 | 15 |
| 5 | 4 | 9 | 10 | 19 | 16 |
| 6 | 5 | 8 | 19 | 18 | 17 |
| 7 | 6 | 7 | 17 | 19 | 18 |
| 8 | 9 | 10 | 16 | 20 | |
| 9 | 10 | 11 | 15 | | |





अस्मिन् चित्रे दोषः कुत्र वर्तते?



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि

२३



इदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. रामायणं केन विरचितम्?

२. महाभारत केन विरचितम् ?

३. रघुवंशस्य कर्ता कः?

४. कादम्बरि के विरचितम्?

५. सुग्रीवस्य अग्रजः कः?

६. दशकण्ठः कः?

७. पीताम्बरः इति कस्य नाम?

८. लङ्का गमन समये कः हनुमन्तं अवरोधितः?

९. लक्ष्मणस्य भार्या का?

१०. रामायणे यागाश्वं कौ बद्धौ?

११. सुभद्रायाः पुत्रः कः?

१२. द्रौपद्याः निजनाम किम्?

१३. इन्द्रप्रस्थं कः निर्मितवान्?

१४. राधेयः कः?

१५.हैडिम्बेयः कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।

२.बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press, 2nd Floor , K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।

३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।

४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।

५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।

६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरिपत्रिकायां प्रचुरितानि भवन्ति।

७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।

८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०६.२०२४ अस्ति।

Subscription Number :

Name :

Mother :

Father :

Address :

Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



2024 एप्रिल् २१ तः २३ पर्यन्तं तिरुमल श्रीस्वामिनः आलयस्य पृष्टभागे स्थिते वसन्तोत्सव मण्टपे आयोजितस्य श्रीस्वामिनः सालकट्ल वसन्तोत्सवस्य दृश्यम्।



2024 एप्रिल् २१ तः २३ पर्यन्तं तिरुपतिश्रीरामचन्द्रपुष्करिण्याम् आयोजितस्य श्री कोदण्डरामस्वामिनः प्लवोत्सवस्य दृश्यम्।



22-04-2024 दिनाङ्के ओण्टिमिट्ट मध्ये आयोजितस्य श्रीसीताराम -कल्याणस्य आन्ध्रप्रदेश प्रभुत्व तः पीताम्बराणि, मौक्तिकाक्षतान् आन्ध्रप्रदेशदेवादायशारवा प्रत्येक मुख्यकार्यदर्शी श्री आर्. करिकालवळवन् ऐ.ए.एस्., ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्., इत्यादयः समर्पितवन्तः।



22-04-2024 दिनाङ्के ओण्टिमिट्ट श्री कोदण्डरामस्वामिनः कल्याणोत्सव सन्दर्भे तिरुमल श्रीस्वामिनः पक्षतः सुवर्णाभरणानि, रजत पूजा वस्तूनि, पीतम्बराणि समर्पित ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., दम्पती। अस्मिन् कार्यक्रमे ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारिणः श्रीवीरब्रह्मम्, ऐ.ए.एस्., श्रीमती एम्.गौतमी ऐ.ए.एस्., भागं गृहीतवन्तः।



26-04-2024 दिनाङ्के तिरुमल श्रीस्वामिनः दर्शननान्तरं भारत- -उपराष्ट्रपतिः गौ।। श्रीजगदीप् धन्खर् दम्पत्योः श्रीस्वामिनः प्रसादं ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., महोदयः दत्तवान्।



26-04-2024 तिरुपतिस्थ बर्ड, श्रीपद्मावती शिशुहृदयालय- -वैद्यशाला आन्ध्रप्रदेश राज्यपालकः गौ।।श्री एस्.अब्दुल् नजीर दम्पती सन्दर्शितदृश्यम्। अस्मिन् कार्यक्रमे ति.ति.दे., सम्युक्त कार्यनिर्वहणाधिकारिणः श्री वीरब्रह्मम् ऐ.ए.एस्., श्रीमती एम्.गौतमी ऐ.ए.एस्., बर्ड ओ.एस्.डि. डा।। रेड्डप्प रेड्डि, शिशु वैद्यशाला सञ्चालकः डा।। श्रीनाथ रेड्डि इत्यादयः भागं गृहीतवन्तः।

SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY
TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-05-2024 & posting at Tirupati
RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal
Regd. No. TRP/154/2024-2026" LICENCED TO POST
WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026"
Posting on 5th of every month.



# तिरुचानूरु
# श्रीपद्मावतीदेव्याः प्लवोत्सवः

**2024 जून् 17 तः 21 पर्यन्तम्**